# ॥ वामनस्तोत्रम् ॥

श्री गणेशाय नमः ।
श्रीअदितिरुवाच ।
यज्ञेश यज्ञपुरुषाच्युत तीर्थपाद तीर्थश्रवः श्रवणमङ्गलनामधेय ।
आपन्नलोकवृजिनोपशमोदयाऽऽद्य शं नः कृधीश भगवन्नसि दीननाथः ॥ १॥

विश्वाय विश्वभवनस्थितिसंयमाय स्वैरं गृहीतपुरुशक्तिगुणाय भूम्ने ।
स्वस्थाय शश्वदुपबृंहितपूर्णबोधव्यापादितात्मतमसे हरये नमस्ते ॥ २॥

आयुः परं वपुरभीष्टमतुल्यलक्ष्मीर्द्यौर्भूरसाः सकलयोगगुणास्त्रिवर्गः ।
ज्ञानं च केवलमनन्त भवन्ति तुष्टात्त्वत्तो नृणां किमु सपत्नजयादिराशीः ॥ ३॥

इति श्रीमद्भागवतपुराणान्तर्गतं वामनस्तोत्रं सम्पूर्णम् ॥

॥ वामनस्तोत्रम् पद्मपुराणान्तर्गतम् ॥

श्रीगणेशाय नमः ।
अदितिरुवाच ।
नमस्ते देवदेवेश सर्वव्यापिन् जनार्दन ।
सत्त्वादिगुणभेदेन लोकव्यापारकारिणे ॥ १॥

नमस्ते बहुरूपाय अरूपाय नमो नमः ।
सर्वैकाद्भुतरूपाय निर्गुणाय गुणात्मने ॥ २॥

नमस्ते लोकनाथाय परमज्ञानरूपिणे ।
सद्भक्तजनवात्सल्यशीलिने मङ्गलात्मने ॥ ३॥

यस्यावताररूपाणि ह्यर्जयन्ति मुनीश्वराः ।
तमादिपुरुषं देवं नमामीष्टार्थसिद्धये ॥ ४॥

यं न जानन्ति श्रुतयो यं न जानन्ति सूरयः ।
तं नमामि जगद्धेतुं मायिनं तममायिनम् ॥ ५॥

यस्यावलोकनं चित्रं मायोपद्रववारणम् ।
जगद्रूपं जगत्पालं तं वन्दे पद्मजाधवम् ॥ ६॥

यो देवस्त्यक्तसङ्गानां शान्तानां करुणार्णवः ।
करोति ह्यात्मना सङ्गं तं वन्दे सङ्गवर्जितम् ॥ ७॥

यत्पादाब्जजलक्लिन्नसेवारञ्जितमस्तकाः ।
अवापुः परमां सिद्धिं तं वन्दे सर्ववन्दितम् ॥ ८॥

यज्ञेश्वरं यज्ञभुजं यज्ञकर्मसु निष्ठितम् ।
नमामि यज्ञफलदं यज्ञकर्मप्रबोधकम् ॥ ९॥

अजामिलोऽपि पापात्मा यन्नामोच्चारणादनु ।
प्राप्तवान्परमं धाम तं वन्दे लोकसाक्षिणम् ॥ १०॥

ब्रह्माद्या अपि ये देवा यन्मायापाशयन्त्रिताः ।
न जानन्ति परं भावं तं वन्दे सर्वनायकम् ॥ ११॥

हृत्पद्मनिलयोऽज्ञानां दूरस्थ इव भाति यः ।

प्रमाणातीतसद्भावं तं वन्दे ज्ञानसाक्षिणम् ॥ १२॥

यन्मुखाद्ब्राह्मणो जातो बाहुभ्यः क्षत्रियोऽजनि ।
तथैव ऊरुतो वैश्यः पद्भ्यां शूद्रो अजायत ॥ १३॥

मनसश्चन्द्रमा जातो जातः सूर्यश्च चक्षुषः ।
मुखादिन्द्रस्तथाग्निश्च प्राणाद्वायुरजायत ॥ १४॥

त्वमिन्द्रः पवनः सोमस्त्वमीशानस्त्वमन्तकः ।
त्वमग्निर्निरृतिश्चैव वरुणस्त्वं दिवाकरः ॥ १५॥

देवाश्च स्थावराश्चैव पिशाचाश्चैव राक्षसाः ।
गिरयः सिद्धगन्धर्वा नद्यो भूमिश्च सागराः ॥ १६॥

त्वमेव जगतामीशो पुन्नामास्ति परात्परः । var यन्नामास्ति
त्वद्रूपमखिलं तस्मात्पुत्रान्मे पाहि श्रीहरे ॥ १७॥

इति स्तुत्वा देवधात्री देवं मत्वा पुनः पुनः । var नत्वा
उवाच प्राञ्जलिर्भूत्वा हर्षाश्रुक्षालितस्तनी ॥ १८॥

अनुग्राह्याऽस्मि देवेश हरे सर्वादिकारण ।
अकण्टकश्रियं देहि मत्सुतानां दिवौकसाम् ॥ १९॥

अन्तर्यामिन् जगद्रूप सर्वभूतपरेश्वर ।
तवाज्ञातं किमस्तीह किं मां मोहयसि प्रभो ॥ २०॥

तथापि तव वक्ष्यामि यन्मे मनसि वर्तते ।
वृथापुत्रास्मिदेवेश रक्षोभिः परिपीडिता ॥ २१॥

एतान्न हन्तुमिच्छामि मत्सुता दितिजातयः । var दितिजा यतः
तानहत्वा श्रियं देहि मत्सुतानामुवाच सा ॥ २२॥

इत्युक्तो देवदेवस्तु पुनः प्रीतिमुपागतः ।
उवाच हर्षयन्साध्वीं कृपयाऽभिपरिप्लुतः ॥ २३॥

श्रीभगवानुवाच ।
प्रीतोऽस्मि देवि भद्रं ते भविष्यामि सुतस्तव ।
यतः सपत्नीतनयेष्वपि वात्सल्यशालिनी ॥ २४॥

त्वया च मे कृतं स्तोत्रं पठन्ति भुवि मानवाः ।
तेषां पुत्रा धनं सम्पन्न हीयन्ते कदाचन ॥ २५॥

अन्ते मत्पदमाप्नोति यद्विष्णोः परमं शुभम् ॥ २६॥

इति श्रीपद्मपुराणान्तर्गतं वामनस्तोत्रं समाप्तम् ।